## सूचीपत्रम् ।

सन्निन्दाऽसति वैभवकथा श्रीशेशयो र्भेदधीः
अश्रद्धा गुरुशास्त्र वेदवचने नामार्थवादभ्रमः
नामास्तीति निषिद्धवृत्ति विहितत्यागश्च धर्मान्तरैः
साम्यं नामजपे शिवस्य च हरेर्नामापराधा दश

❀ ॐ नमश्चण्डिकायै ❀

# ❀ अथ प्रयोग विधिः ❀

ॐ गणाधिपतये नमः ॥ अथ प्रयोगान्तराणि कात्यायनी तन्त्रोक्तानि प्रतिश्लोकमाद्यन्तयोः प्रणवं जपेन्मंत्रसिद्धिः ॥ १ ॥ अग्रे सर्वत्र श्लोकपदं मंत्रोपलक्षणम् । सप्रणवमनुलोमव्याहृतित्रयमादौ, अन्ते तुविलोमन्तदित्येवं प्रतिश्लोकं कृत्वा शतावृत्ति-पठेऽतिशीघ्रं सिद्धिः ॥ २ ॥ प्रतिश्लोकमादौ जातवेदस इत्यृचं पठेत्सर्वकामसिद्धिः ॥ ३ ॥ अप-

मृत्युवारणायत्र्यम्बकमन्त्रम्पठेत् ॥ आदावन्ते च शतमित्यर्थः । प्रतिश्लोकं तन्मन्त्रजपइत्यन्यत्र ॥ ४ ॥ प्रतिश्लोकं शूलेन पाहिनो देवीति पाठादपमृत्युनाशः । अस्य केवलस्यापि श्लोकस्य लक्षमयुतं सहस्रं शतं वा जपे अपमृत्युवारणम् ॥ ५ ॥ प्रतिश्लोकं शरणागतदीनार्तेति श्लोकं पठेत्सर्वकार्यसिद्धिः ॥ ६ ॥ प्रतिश्लोकंकरोतु सा नः शुभेत्यर्द्धं पठेत्सर्वकार्यसिद्धिः ॥ ७ ॥ स्वाभीष्ट वरप्राप्तये 'एवं देव्या वरं लब्ध्वेति' श्लोकं पठेत् ॥ सर्वापत्तिवारणाय

प्रतिश्लोकं 'दुर्गे स्मृतेति' पठेत् । अस्य केवलस्यापि श्लोकस्यकार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः ॥ ९ ॥ सर्वाबाधेत्यस्य लक्षजपे प्रतिश्लोकपाठे वा श्लोकोक्तं फलम् ॥१०॥ इत्थं यदा यदा बाधेति श्लोकं जपेन्महामारी शान्तिः ॥ ११ ॥ ततो वव्रे नृपो राज्यमितिमन्त्रस्य जपे पुनः स्वराज्यलाभः ॥ ॥ १२ ॥ हिनस्ति दैत्यतेजांसीत्यनेन सदीपबलिदा-नेन घंटाबन्धनेन च बालग्रहशान्तिः ॥ १३ ॥ आद्यावृत्तिमनुलोमेन पठित्वा ततो विपरीत क्रमेण

द्वितीयामनुलोमेनतृतीयामित्येवमावृत्तित्रयेणशीघ्रं कार्यसिद्धिः ॥ १४ ॥ सर्वापत्तिवारणाय दुर्गे स्मृते-त्यर्द्धं पठेत्। ततो 'यदन्ति यच्च दूर' इत्यृचं तदन्तं दारिद्र्यदुः खेत्यर्द्धमेवकार्यानुसारेणलक्षमयुतं सहस्रं शतं वा जपेत् ॥ १५ ॥ कांसोस्मीत्यृचं प्रतिश्लोकं पठेल्लक्ष्मीप्राप्तिः ॥ १६ ॥ प्रतिश्लोकमनृणा अस्मि-न्नित्यृचं पठेदृणपरिहारः ॥१७॥ मारणार्थमेवमुक्त्वा समुत्पत्येति श्लोकं प्रति श्लोकं पठेन्मारणोक्तावृत्तिभिः फलसिद्धिः ॥१८॥ ज्ञानिनामपि चेतांसि इति

श्लोकजपमात्रेण सद्यो मोहनमित्यनुभवसिद्धम् । प्रति-
श्लोकंतच्छ्लोकपाठेत्ववश्यम् ॥ १६ ॥ रोगानशे-
षानिति श्लोकस्य प्रतिश्लोकपाठे सकलरोगनाशः
तत्र मन्त्र जपेऽपिसिद्धिः ॥ २० ॥ इत्युक्त्वा सा त-
दा देवीगम्भीरेति श्लोकस्य प्रतिश्लोकपाठे पृथग्जपेवा
विद्याप्राप्तिर्वाग्वैकृतनाशश्च ॥२१॥ भगवत्याकृतंसर्व
मित्यादि द्वादशोत्तरशताक्षरीमन्त्रः सर्वकामद आपद-
वारणश्च ॥ २२ ॥ देवि प्रपन्नार्तिहरे इति श्लोकस्य
यथाकाय लक्षायुतसहस्रं शतान्यतमसंख्यया जपे प्रति-

श्लोक पाठे वा सर्वापन्निवृत्तिः सर्वकामावाप्तिश्च । एषु प्रयोगेषु प्रतिश्लोकं दीपाग्रे केवलमेव नमस्कारेणाऽतिशीघ्रं सिद्धिः । प्रतिश्लोकं कामबीजसम्पुटितस्य एकचत्वारिंशद्दिन त्रिरावृत्तौ सर्वकामसिद्धिः ॥२३॥ एकविंशतिदिनपर्यन्तमुक्तरीत्या प्रत्यहं द्वादशावृत्तौ वशीकरणम् ॥ २४ ॥ मायाबीजसम्पुटितस्य फट्पल्लवसहितस्यसप्तदिन पर्यन्तत्रयोदशावृत्तावुच्चाटनसिद्धिः ॥ २५ ॥ तादृशमेवदिन चतुष्टयमेकादशावृत्तौसर्वोपद्रवनाशः ॥ २६ ॥ एकोनपञ्चाशद्दिनपर्यन्तं प्रति-

श्लोकंश्री बीजसम्पुटितस्य पञ्चदशावृत्तौ लक्ष्मीप्राप्तिः ॥ २७॥ प्रतिश्लोकं वाग्बीजसम्पुटितस्यशतावृत्या विद्याप्राप्तिः ॥ २८ ॥

### अथ शतचण्डी सहस्रचण्डी विधिः

मंत्रमहोदधौ-१८ तरंगे।

शतचण्डी विधानं तु प्रवक्ष्ये प्रीतये नृणाम् । नृपोपद्रव आपन्ने दुर्भिक्षे भूमिकम्पने॥१॥अतिवृष्ट्या मनावृष्टौ परचक्रभयेक्षये ॥ सर्वे विघ्ना विनश्यन्ति शतचण्डी विधौ कृते ॥२॥ रोगाणां वैरिणां नाशो धनपुत्रसमृद्धयः । शङ्करस्य भवान्या वा प्रासादनिकटे

श्री० शुभम् ॥३॥ मण्डपंद्वारमेवाढ्यं कूर्यात्सध्वजतोरणम्॥
तत्रकुण्डं प्रकुर्वीत प्रतीच्यां मध्यतोऽपि वा ॥३॥
स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश वाडवान् ॥ कु०
४ जितेन्द्रियान्सदाचारान् कुलीनान्सत्यवादिनः ॥४॥
व्युत्पन्नांश्चण्डिकापाठरतांल्लज्जादयावतः ॥ मधुपर्क-
विधानेन स्वर्णवस्त्रादिदानतः ॥ ५ ॥ जपार्थमासनं
मालां दद्यात्तेभ्योऽपि भोजनम् । ते हविष्यान्नमश्नन्तो ४
मन्त्रार्थगतमानसाः ॥ ७ ॥ भूमौ शयाना-प्रत्येकं
जपेयुश्चण्डिकास्तवम् ॥ मार्कण्डेयपुराणोक्तं दशकृत्वः

सचेतसः ॥८॥ नवार्णां चण्डिकामन्त्रं जपेयुश्चायुतं
पृथक् ॥ ( पृथक् सम्पुटीकरणादिति शेषः । प्रत्येक-
ब्राह्मणेन युतं जपः कार्य्यः ) यजमानः पूजयेच्च
१० कन्याया नवकं शुभम् ॥ द्विवर्षाद्याद्दशाब्दान्ता-
कुमारीः परिपूजयेत् ॥ नाधिकाङ्गीं नहीनाङ्गीं कुष्ठिनीं
च व्रणाङ्किताम् ॥१०॥ अन्धां काणां केकरां च कुरूपां
लोमयुक्तनुम् । दासी जातां रोमयुक्तां दुष्टां कन्यां न १०
पूजयेत् ॥११॥ विप्रजामिष्टसंसिद्ध्यै यशसे क्षत्रियो-
द्भवाम् ॥ वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत्

॥१२॥ द्विवर्षा सा कुमार्युक्ता त्रिमूर्तिर्हायनत्रिका ॥
चतुरब्दा तु कल्याणी पंचवर्षा तु रोहिणी॥१३॥षडब्दा
कालिका प्रोक्ताचण्डिका सप्तहायनी ॥ अष्टवर्षा शा-
म्भवी स्याद् दुर्गा तु नवहायना ॥१४॥ सुभद्रा दश-
वर्षोक्तास्ता मन्त्रैः परिपूजयेत् । एकाब्दायाः प्रीत्य
भावो रुद्राब्दा तु विवर्जिताः ॥ १५ ॥ तासामावाहने
मन्त्राः प्रोच्यंते शङ्करोदिताः ॥ मन्त्राक्षरमयीं लक्ष्मीं
मातॄणां रूपधारिणीम् । नवदुर्गात्मिकां साक्षात्क-
न्यामावाहयाम्यहम् ॥ कुमारिकादिकन्य.नां पूजाम-

कु० ११

न्त्रान्भुवेऽमुना ॥ १७ ॥ जगत्पूज्येजगद्वन्द्ये सर्वदेव
स्वरूपिणी ॥ पूजां गृहाण कौमारि जगन्मातर्नमो- कु०
कु० ऽस्तुते ॥ त्रिपुरां त्रिपुराधारांत्रिवर्गं ज्ञानरूपिणीम्
॥ १८ ॥ त्रैलोक्यवन्दितां देवीं त्रिमूर्तिं पूजयाम्य
१२ हम् ॥ १९ ॥ कालात्मिकां कलातीतां कारुण्य-
हृदयां शिवाम् ॥ कल्याणजननीं देवीं कल्याणीं-
पूजयाम्यहम् ॥२० ॥ अणिमादि गुणाधारामकारा
द्यक्षरात्मिकाम् ॥ अनन्तशक्तिकां लक्ष्मीं रोहिणीं १२
पूजयाम्यहम् ॥२१॥ कामचारां शुभां कान्तां काल

चक्रस्वरूपिणीम् ॥ कामदां करुणोदारां कालिकां
पूजयाम्यहम् ॥ २२ ॥ चण्डवीरां चण्डमायां चण्ड-
मुण्डप्रभंजनीम् ॥ पूजयामि महादेवीं चण्डिकां चण्ड-
विक्रमाम् ॥२६॥ सदानन्दकरीं शान्तां सर्वदेवनम-
स्कृताम् ॥ सर्वभूतात्मिकां देवीं शाम्भवीं पूजयाम्यहम्
॥ २४ ॥ दुर्गमे दुस्तरे कार्ये भवार्णव–विनाशिनीम्
पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशनीम् ॥२५॥
सुन्दरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् ॥ सुभद्र-
जननीं देवीं सुभद्रां पूजयाम्यहम् ॥ २६ ॥ एतैर्म-

न्त्रैः पुराणोक्तैः स्नातां कन्यां प्रपूजयेत् ॥ गन्धैः
पुष्पैर्भक्ष्यभोज्यैर्वस्त्रैराभरणैरपि ॥ २७ ॥ वेद्यां विर-
चिते रम्ये सर्वतोभद्रमंडले ॥ घटं संस्थाप्य विधिव-
त्तत्रावाह्यार्चयेच्छिवाम् ॥२८॥ तदग्रे कन्यकाश्चा-
पि पूजयेद्ब्राह्मणानपि ॥ उपचारैस्तु विविधैः पूर्वो-
क्ता वरणान्यपि ॥ २९ ॥ एवं चतुर्दिनं कृत्वा पञ्च-
मे होममाचरेत् ॥ पायसान्नैस्त्रिमध्वक्तैर्दाडिमफ-
लैरपि ॥३०॥ मातुलिंगै र्द्राक्षाद्यैर्नारिकेलैः पुरै-
स्तिलैः ॥ जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिः ॥३१॥

शप्तशत्यादशावृत्याप्रतिश्लोक हुतं चरेत् ॥ अयुतं च
ग्रं० नवार्णेन स्थापिताग्नौविधानतः ॥ ३२ ॥ कृत्वा
वरणदेवानां होमं तन्नाममंत्रतः ॥ कृत्वा पूर्णाहुतिं
१५ सम्यग्देवमग्निं विसृज्य च ॥३३॥ अभिषिंचेद्ययष्टारं
विप्रौघं कलशोदकैः ॥ निष्कं सुवर्णमथवा प्रत्येकं
दक्षिणां दिशेत्॥३४॥भोजयेच्चशतंविप्रान्भक्ष्यभोज्यैः
पृथग्विधैः ॥ तेभ्योपिदक्षिणां दत्वा गृह्णीयादाशिष-
स्ततः ॥३५॥ एवंकृतेजगद्वश्यं सर्वं नश्यन्त्युपद्रवाः॥
राज्यंधनंयशःपुत्रान्विप्रप्रत्यक्षमेवसः ॥३६॥ एतद्दश-

गुणांकुर्याच्चण्डी साहस्रजाविधम् ॥ विद्यावतः सदाचा-
रान्ब्राह्मणान्वृणुयाच्छतम् ॥ ३७ ॥ प्रत्येकं चण्डि-
कापाठान्विदध्युस्तेदिशामिताम् ॥ अयुतं प्रजपेयुस्तं
प्रत्येकन्नवबर्णकम् ॥ ३८ ॥ पूर्वोक्ताः कन्यकाः
पूज्याः पूर्वमन्त्रैः शतं शुभाः॥ एवं दशाहं सम्पाद्यहो-
मं कुर्युः प्रयत्नतः ॥ ३९ ॥ सप्तशत्याः शतावृत्त्या
प्रतिश्लोकं विधानतः लक्षसंख्य नवार्णेन पूर्वोक्तैर्द्र-
व्यसंचयैः ॥ ४० ॥ होतृभ्यो दक्षिणां दत्वा पूर्वो-
क्तान्भोजयेद्विजान् ॥ सहस्रसम्मितान्साधून्दे०यारा-

दु० १६

धनतत्परान् ॥ ४१ ॥ एवं सहस्रसंख्याके कृतेचण्डी-
विधौनृणाम् । सिध्यत्यभीप्सितं सर्वं दुःखौघश्च विन-
१७ श्यति ॥ ४२ ॥ मारीदुर्भिक्षरोगाद्या नश्यन्तिव्य-
सनोच्चयाः नेमंविधिं वदेत् दुष्टे खले चौरे गुरुद्रुहि
॥ ४३ ॥ साधौजितेन्द्रियदान्ते वदेद्विधि मिमंपरम् ।
एवं सा चंडिकातुष्टावक्तॄञ्छ्रोतॄंश्च रक्षति ॥४५॥

* इति * १७

पाठ प्रकारो यथा वाराहीतन्त्रे—

आधारं स्थापयित्वा तु पुस्तकं वाचयेत्ततः ।

हस्त संस्थापनाद् देवि भवेदर्धं फलं यतः ॥ यावन्न
पृ० पूर्यतेऽध्यायस्तावन्न विरमेत्पठन् । यदि प्रमादाद्- पृ०
ध्याये विरामो भवति प्रिये॥ पुनरध्यायमारभ्यपठेत्सर्वं
१८ मुहुर्मुहुः । अनुक्रम त्पठेद् देवि शिरःकम्पादिकं त्यजेत्
कवचादिक्रमवश्यमेवपठनीयम् ।

देह संरक्षणार्थाय वर्ममादौततोऽर्गलाम् ।
ततः कीलं पठेत् पश्चात् सप्तशत्यास्तवंजपेत् ॥ १ ॥

प्रथमं चरितं प्रोक्तं मधुकैटभ नाशनम् । १८
द्वितीयं विद्धिचरितं महिषासुर घातनम् ॥ १ ॥
तृतीयं चरितं ज्ञेयं शुंभदैत्य वध निवृत्तम् । चरितानि-

जपेत् त्रीणि सरहस्यान्यतेन्द्रियः ॥ २ ॥ तथाशत-
मादौ शतं चान्ते जपेन्मन्त्रं नवार्णकम् । चण्डी सप्त-
शती मध्ये सम्पुटोऽयमुदाहृतः ॥ १ ॥ सकामः
१८ सम्पुटोजप्यो निष्कामः सम्पुटंविना ॥ २ ॥

मारीचिकल्पे-

रात्रिसूक्तं जपेदादौ मध्ये सप्तशतीस्तवम् ।
अन्ते तु जपनीयं वै देवीसूक्तमितिक्रमः ॥ १ ॥
एवं संपुटितं स्तोत्रं सर्वकामार्थ सिद्धिदम् ॥ २ ॥ १४

शापोद्धार मन्त्रः-

ओं ह्रीं क्लीं श्रीं क्रां क्रीं चण्डिके देवि

शापानुग्रहं कुरु कुरु स्वाहा । इति सप्तवारं जपेत् ॥

प्रातः सायं यदा कदा प्रतिदिनं वा यजमानः आचम्य प्राणानायम्य अनोभद्रादिमङ्गलमन्त्रपठनानन्तरङ्‌ शाश्वतादिभिःसंकल्पंकुर्यात् ।

अद्येत्यादि देश कालौ संकीर्त्य समस्तापन्निवारण पूर्वक मङ्गलप्राप्त्यर्थं गोत्रस्य नाम्नः सर्व मनोरथ सिद्धये महाकाली महालक्ष्मी महासरस्वती प्रीत्यर्थङ्क वचार्गलाकीलकन्न्यासपूर्वकाष्टोत्तर शतनवार्ण

णिभावितामनुरित्यन्तन्तदन्ते देवी सूक्तम्पुनर्नवार्णा-
ष्टोत्तरशतजपं रहस्यत्रययुतं दुर्गासप्तशतीपाठमहङ्क
रिष्ये । शतचण्डी सहस्रचण्डी पाठं वा । तदङ्गत्वेन
स्वस्तिपुण्याहवाचनं मातृका पूजनं वसोर्धारापूजन-
२१ मायुष्यमन्त्रजपन्नान्दी श्राद्धमाचार्यवरणादीनि करि-
ष्ये । तत्रादौ निर्विघ्नतासिध्यर्थं गणेशाम्बिकयोः २१
पूजनङ्करिष्ये । एतानि सर्वाणि कृत्वानुष्ठानमारभेत् ।
प्रथमे दिने अयंक्रमः ततः प्रतिदिनं संक्षेपतोयथा
शक्ति पूजितानान्देवानां देवीनाञ्च पूजा कर्तव्या ।

कृतानाम्ब्राह्मणानाञ्च पूजावश्यकी शक्तौ सत्यां कु-
मारी पूजनं स्त्रीणाम्पूजनञ्च । समय विषये तु न
विशेष नियमः तदुक्तम्—मार्कण्डेयपुराणोक्तं देवी
सप्तशतीस्तवम् । सर्वकामोद्यकामो वा भक्त्याकुर्या-
दहर्निशम् ॥ सदामन्त्रजपंकुर्याद्धोमंकुर्याद्विधानतः ॥
तर्पणम्मार्जनन्देव्याः सद्विप्राणां च भोजनम् ॥

इति डमरतंत्रे यामले वाराहीतन्त्रे च ।

ततः "ॐ नमो देव्यै" इत्यादि मन्त्रेण पुस्तकस्य पञ्चोपचारैः पूजां कृत्वा तद्भावेन भावितः पाठं कुर्यात् ।

अग्रिमाणि नवचित्राणि नवरात्रेषु क्रमशः दर्शनीयानि

२८




२८


श्रीमहागौरी
COPYRIGHT RESERVED

श्रीगणेशाय नमः ॐ नमश्चण्डिकायै ॥

॥ मार्कण्डेय उवाच ॥

ॐ यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।
३२ यन्नकस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १ ॥

॥ ब्रह्मोवाच ॥

अस्तिगुह्यतमंविप्रसर्वभूतोपकारकम् । देव्या- ३२
स्तुकवचंपुण्यं तच्छृणुष्वमहामुने ॥ १ ॥ प्रथमं शैल
पुत्री च द्वितीयं ब्रह्मचारिणी ॥ तृतीयं चन्द्रघण्टेति
कूष्माण्डेति चतुर्थकम् ॥ ३ ॥ पंचमं स्कन्दमातेति

कूष्माण्डेति चतुर्थकम् ॥ ३ ॥ पञ्चमं स्कन्दमातेति
षष्ठं कात्यायनीति च । सप्तमं कालरात्रीति महागौ
ॐ रीति चाष्टमम् ॥ ४ ॥ नवमं सिद्धि-दात्री च नव ॐ
३३ दुर्गाः प्रकीर्तिताः ॥ उक्तान्येतानि नामानि ब्रह्मणैव
महात्मना ॥ ५ ॥ अग्निना दह्यमानस्तु शत्रु मध्ये
गतो रणे । विषमेदुर्गमे चैव भयार्ताः शरणं गताः
॥ ६ ॥ न तेषां जायते किंचिदशुभं रणसंकटे ।
नापदं तस्य पश्यामि शोकदुःखभयं न हि ॥ ७ ॥
यैस्तु भक्त्या स्मृता नूनं तेषां बृद्धिःप्रजायते । ये
त्वां स्मरन्ति देवेशि रक्षसे तान्न संशयः ॥८॥ प्रेत-

संस्था तु चामुण्डा वाराही महिषासना । ऐन्द्री
गजसमारूढ़ा वैष्णवी गरुड़ासना ॥ ९ ॥ माहेश्वरी ४०
वृषारूढ़ा कौमारी शिखिवाहना ॥ लक्ष्मीःपद्मासना
३७ देवी पद्महस्ता हरिप्रिया ॥ १० ॥ श्वेत रूपधरा
३८ देवी ईश्वरी वृषवाहना । ब्राह्मी हंससमारूढ़ा सर्वा-
भरणभूषिता ॥ ११ ॥ इत्येता मातरः सर्वाः सर्व
योगसमन्विताः ॥ नानाभरणशोभाढ्या नानारत्नो-
पशोभिताः ॥ १२ ॥ दृश्यन्तेरथमारूढ़ा देव्यः क्रो- ३९
धसमाकुलाः ॥ शंखं चक्रं गदां शक्तिं हलं च मुस-

शंखं चक्रं गदां शक्तिं हलं च मुस-
लायुधम् ॥ १३ ॥ खेटकं तोमरञ्चैव परशुम्पाशमेव
च । कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम्
॥ १४ ॥ दैत्यानां देहनाशाय भक्तानामभयाय च ।
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥ १५ ॥
नमस्तेऽस्तुमहारौद्रे महाघोरपराक्रमे । महाबले महो-
त्साहे महाभयविनाशिनी ॥ १६ ॥ त्राहि मां
देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनी । प्राच्यां रक्षतु
मामैन्द्री आग्नेय्यामग्निदेवता ॥ १७ ॥ दक्षिणेऽवतु
वाराही नैर्ऋत्यां खड्गधारिणी । प्रतिच्यां वारुणी

रक्षेद्वायव्यां मृगवाहिनी ॥ १८ ॥ उदीच्यां पातु
कौमारी ईशान्यां शूलधारिणी । ऊर्ध्वं ब्रह्माणि मे
रक्षेदधस्ताद्वैष्णवी तथा ॥ १९ ॥ एवं दशदिशो
रक्षेच्चामुण्डा शवबाहना । जया मे चाग्रतः पातु
३६ विजया पातु पृष्ठतः ॥ २० ॥ अजितावामपार्श्वे तु
दक्षिणे चापराजिता । शिखामुद्योतिनीरक्षेदुमा
मूर्ध्निव्यवस्थिता ॥ २१ ॥ मालाधरीललाटे च भ्रुवौ-
रक्षेद्यशस्विनी । त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च
नासिके ॥ २२ ॥ शंखिनी चक्षुषोर्मध्ये श्रोत्रयो- ३८

नासिके ॥ २२ ॥ शंखिनी चक्षुषोर्मध्ये श्रोत्रयो- ३६

द्वारवासिनी । कपोलौ कालिका रक्षेत् कर्णमूले
तु शाङ्करी ॥ २२ ॥ नासिकायां सुगन्धा च उत्त-
रोष्ठे च चर्चिका । अधरे चामृतकला जिह्वायां च ॐ
ॐ सरस्वती ॥ २४ ॥ दन्तान्रक्षतु कौमारी कंठदेशेतु
३७ चण्डिका । घंटिकां चित्रघंटा च महामाया च
तालुके ॥ २५ ॥ कामाक्षी चिबुकं रक्षेद्वाचं मे सर्व-
मङ्गला । ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ।
॥२६॥ नीलग्रीवा वहिः कण्ठेनलिकां नलकूबरी । ३७
स्कन्धयोः खड्गिनी रक्षेद्बाहू मे ब्रजधारिणी ॥२७॥

हस्तयोर्दण्डिनी रक्षेदम्बिका चांगुलीषु च । नखा-
ञ्छूलेश्वरी रक्षेत्कुक्षौ रक्षेत्कुलेश्वरी ॥ २८ ॥
ॐ स्तनौरक्षेन्महादेवी मनःशोकविनाशिनी । हृदये
३८ ललिता देवी उदरे शूलधारिणी ॥ २९ ॥ नाभौ
च कामिका रक्षेद्गुह्यं गुह्येश्वरी तथा । पूतना
कामिनी मेढ्रं गुदे महिषवाहिनी ॥ ३० ॥ कट्यां ३८
भगवती रक्षेज्जानुनी विन्ध्यवासिनी । जंघे महाबला
रक्षेत्सर्वकामप्रदायिनी ॥३१॥ गुल्फयोर्नारसिंही च
पादपृष्ठे तु तेजसी । पादांगुलीषु श्रीरक्षेत्पादाधःस्थ

पादपृष्ठे तु तैजसी । पादाङ्गुलीषु श्रीरक्षेत्पादाधस्त

लवासिनी ॥ ३२ ॥ नखान्दंष्ट्रा कराली च केशां
श्चैवोर्ध्वकेशिनी । रोमकूपेषु कौमारी त्वचं वागी-
श्वरी तथा ॥ ३३ ॥ रक्तमज्जावसामांसान्यस्थि- ॐ
ॐ मेदांसि पार्वती । अन्त्राणि कालरात्री च पित्तं च
३८ मुकुटेश्वरी ॥३४॥ पद्मावती पद्मकोशे कफे चूडा
मणिस्तथा । ज्वालामुखी नखज्वालाम भेद्या सर्वस
न्धिषु ॥ ३५ ॥ शुक्रं ब्रह्माणि मे रक्षेच्छायां छत्रे-
श्वरी तथा । अहंकारं मनोबुद्धिं रक्षेन्मे धर्मधा- ३८
रिणी ॥ ३६ ॥ प्राणापानौ तथा व्यानमुदानं च

समानकम् ॥ अजहस्ता च मे रक्षेत्प्राणां कल्याण-
शोभना ॥ ३७ ॥ रसे रूपे च गन्धे च शब्दे स्पर्शे
ॐ च योगिनी । सत्वं रजस्तमश्चैव रक्षेन्नारायणी सदा क०
४० ॥ ३८ ॥ आयू रक्षतु वाराही धर्मं रक्षतु वैष्णवी ।
यशः कीर्तिं च लक्ष्मीञ्च धनं विद्याञ्च चक्रिणी
॥३९॥ गोत्रमिंद्राणी मे रक्षेत्पशुन्मे रक्ष चण्डिके ।
पुत्राञ्रक्षेन्महालक्ष्मीर्भार्यांरक्षतु भैरवी ॥४०॥ पंथानं ४०
सुपथारक्षेन्मार्गंक्षेमकरीतथा । राजद्वारे महालक्ष्मी
विजया सर्वतःस्थिता ॥ ४१ ॥ रक्षाहीनंतुयत्स्थानं

विजया सर्वतःस्थिता ॥ ४१ ॥ रक्षाहीनं तु यत्स्थानं
वर्जितं कवचेन तु । तत्सर्वं रक्ष मे देवि जयन्ती
पापनाशिनी ॥ ४२ ॥ पदमेकं न गच्छेत्तु यदीच्छे-
च्छुभमात्मनः । कवचेनावृतो नित्यं यत्र यत्रैव ग-
४१ च्छति ॥४३॥ तत्र तत्रार्थलाभश्च विजयः सार्वका-
मिकः । यं यं चिन्तयते कामं तं तं प्राप्नोति नि-
श्चितम् । परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान्
॥४४॥ निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ।
त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् ॥४५॥ ४१
इदं तु देव्याः कवचं देवानामपि दुर्लभम् । यः पठे

स्मरतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः ॥ ४६ ॥ दैवी श्री
कला भवेत्तस्य त्रैलोक्येष्वपराजितः । जीवेद्वर्षशतं
श्री साग्रमपमृत्युविवर्जितः ॥ ४७ ॥ नश्यन्ति व्याधयः
४२ सर्वे लूता विस्फोटकादयः । स्थावरं जङ्गमञ्चैव कृत्रि-
मञ्चापि यद्विषम् ॥४८॥ अभिचाराणि सर्वाणि मंत्र
यंत्राणि भूतले । भूचराः खेचराश्चैव जलजाश्चोपदे-
शिकाः ।४६। सहजाःकुलजामालाशाकिनी डाकिनी- ४२
तथा । अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः
...गन्धर्वराक्षसाः ॥

ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ॥ ५१ ॥
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते । मानो-
न्नतिर्भवेद्राज्यं तेजोवृद्धिकरम्परम् ॥ ५२ ॥ यशसा-
४३ वर्द्धते सोऽपि कीर्तिमण्डितभूतले । जपेत्सप्तशतीं
चण्डीं कृत्वा तु कवचम्पुरा ॥ ५३ ॥ यावद्भूम-
ण्डलं धत्ते सशैलवनकाननम् । तावत्तिष्ठति मेदिन्यां
सन्ततिः पुत्रपौत्रिकी ॥ ५४ ॥ देहांते परमं स्थानं ४३
यत्सुरैरपि दुर्लभम् । प्राप्नोति पुरुषो नित्यं महामा-
याप्रसादतः ॥ ५५ ॥ लभते परमं रूपं शिवेन

सह मोदते ॥ ५६ ॥ ॥ इति ॥

॥ ॐ नमश्चण्डिकायै ॥

॥ अथ अर्गलास्तोत्रं प्रारम्भः ॥

जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तुते
॥१॥ जय त्वं देवि चामुण्डे जय भूतार्तिहारिणि ।
जय सर्वगते देवि कालरात्रि नमोस्तुते ॥ २ ॥
मधुकैटभविद्रावि विधातृवरदे नमः । रूपं देहि जयं

मधुकैटभविद्राविविधातृवरदे नमः । रूपं देहि जयं
देहि यशो देहि द्विषो जहि ॥ ३ ॥ महिषासुरनि-
र्णाशि भक्तानां सुखदे नमः । रूपं देहि जयं देहि
यशो देहि द्विषो जहि ॥ ४ ॥ रक्तबीजवधे देवि
४५ चण्डमुण्डविनाशिनि । रूपं देहि जयं देहि यशो देहि
द्विषो जहि ॥५॥ शुम्भस्यैव निशुम्भस्य धूम्राक्षस्य च
मर्दिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि
॥ ६ ॥ वन्दिताङ्घ्रियुगे देवि सर्व सौभाग्यदायिनी ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ७ ॥ ४५
अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि । रूपं देहि

जयं देहि यशो देहि द्विषो जहि ॥ ८ ॥ नतेभ्यः सर्वदा
भक्त्या चण्डिके दुरितापहे । रूपं देहि जयं देहि यशो
श्री देहि द्विषो जहि ॥ ९ ॥ स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डि- श्री
४६ के व्याधिनाशिनि । रूपं देहि जयं देहि यशो
देहि द्विषो जहि ॥ १० ॥ चण्डिके सततं ये त्वाम-
र्चयन्तीह भक्तितः । रूपं देहि जयं देहि यशो देहि
द्विषो जहि ॥ ११ ॥ देहि सौभाग्यमारोग्यं देहि मे ४६
परमं सुखम् । रूपं देहि जयं देहि यशो देहि द्विषो

च्चकैः। रूपं देहि जयं देहि यशो देहि द्विषो जहि
॥ १३ ॥ विधेहि देवि कल्याणं विधेहि परमां
श्रियम्। रूपं देहि जयं देहि यशो देहि द्विषो जहि
॥ १४ ॥ सुरासुरशिरोरत्ननिघृष्ट चरणेऽम्बिके। ४७
४७ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १५ ॥
विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु। रूपं
देहि जयं देहि यशो देहि द्विषो जहि ॥ १६ ॥
प्रचण्ड दैत्यदर्पघ्ने चंडिके प्रणताय मे। रूपं देहि
जयं देहि यशो देहि द्विषो जहि ॥ १७ ॥ चतुर्भुजे

चतुर्वक्त्र-संस्तुते परमेश्वरि । रूपं देहि जयं
देहि यशो देहि द्विषो जहि ॥ १८ ॥
ॐ कृष्णेन संस्तुते देवि शश्वद्भक्त्या सदाम्बिके । रूपं ॐ
४८ देहि जयं देहि यशो देहि द्विषो जहि ॥ १९ ॥
हिमाचल सुतानाथ संस्तुते परमेश्वरि । रूपं देहि
जयं देहि यशो देहि द्विषो जहि ॥ २० ॥ इन्द्राणी
पति सद्भाव पूजिते परमेश्वरि । रूपं देहि जयं देहि
यशो देहि द्विषो जहि ॥ २१ ॥ देवि प्रचंडदोर्दंड ४८
दैत्यदर्प विनाशिनि । रूपं देहि जयं देहि यशो

दैत्यदर्पविनाशिनि । रूपं देहि जयं देहि यशो
देहि द्विषो जहि ॥ २२ ॥ देवि भक्तजनोद्दामदत्ता-
नन्दोदयेऽम्बिके । रूपं देहि जयं देहि यशो देहि
४८ द्विषो जहि ॥२३॥ पत्नीं मनोरमां देहि मनोवृत्ता-
नुसारिणीम् । तारिणीं दुर्गसंसारसागरस्य कुलो-
द्भवाम् ॥२४॥ इदं स्तोत्रं पठित्वा तु महा-
स्तोत्रं पठेन्नरः । स तु सप्तशती संख्यापरमाप्नोति
संपदाम् ॥ २५ ॥

४८

इति श्रीमार्कण्डेयपुराणेऽर्गलास्तोत्रं समाप्तम् ।

## ॥ अथ कीलकस्तोत्र प्रारम्भः ॥

नमश्चण्डिकायै मार्कण्डेय उवाच ।

विशुद्धज्ञान देहाय त्रिवेदीदिव्यचक्षुषे । श्रेयः
प्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥ सर्वमे-
तद्विजानीयान्मंत्राणामपि कीलकम् । सोऽपि क्षे-
ममवाप्नोति सततं जाप्यतत्परः ॥ २ ॥ सिद्ध्यन्त्यु-
च्चाटनादीनि वस्तूनि सकलान्यपि । एतेन स्तुवतां
देवी स्तोत्रमात्रेणसिद्ध्यति ॥ ३ ॥ न मंत्रं नौषधं

सर्वमुच्चाटनादिकम् ॥ ४ ॥ समग्राण्यपि सिद्ध्यंति
ॐ लोकशङ्कामिमां हर। कृत्वा निमन्त्रयामास सर्वमे- ॐ
वमिदं शुभम् ॥ ५ ॥ स्तोत्रं वै चण्डिकायास्तु तच्च
५१ गुप्तं चकार सः समाप्नोति सुपुण्येन तां यथावन्नि-
यन्त्रणाम् ॥ ६ ॥ सोऽपि क्षेममवाप्नोति सर्वमेव न
संशयः। कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः
॥७॥ ददाति प्रतिगृह्णाति नान्यथैषा प्रसिद्ध्यति। ५१
इत्थंरूपेण कीलेन महादेवेन कीलितम् ॥ ८ ॥ यो
निष्कीलां विधायैनां नित्यं जपति सुस्फुटम्। स

सिद्धः सगणः सोऽपि गन्धर्वो जायते नरः ॥ ९ ॥
न चैवाप्यंतस्तस्य भयं क्वापि हि जायते । नापमृत्यु-
वशं याति मृतो मोक्षमवाप्नुयात् ॥ १० ॥ ज्ञात्वा
प्रारभ्य कुर्वीत न कुर्वाणो विनश्यति । ततो ज्ञात्वैव
५२ सम्पन्नमिदं प्रारभ्यते बुधैः ॥ ११ ॥ सौभाग्यादि च
यत्किञ्चिद्दृश्यते ललनाजने । तत्सर्वं त्वत्प्रसादेन
तेन जाप्यमिदं शुभम् ॥ १२ ॥ शनैस्तु जप्यमानेऽ
स्मिन् स्तोत्रे सम्पत्तिरुच्चकैः । भवत्येव समग्रापि ततः
प्रारभ्यमेव तत् ॥ १३ ॥ ऐश्वर्यं यत्प्रसादेन सौभा-

प्रारभ्यमेव तत् ॥ १३ ॥ ऐश्वर्यं यत्प्रसादेन सौभा-
ग्यारोग्यसम्पदः । शत्रुहानिः परो मोक्षः स्तूयते
सा न किञ्जनैः ॥ १४ ॥ ॥ इति ॥

॥ अथ उत्कीलन मन्त्रः ॥

ॐ श्रीं क्लीं ह्रीं सप्तशति चण्डिके उत्कीलनं
कुरूकुरू स्वाहा । इति एक विंशति वारंजपेत् ।

॥ अथ नवार्ण विधिः ॥

श्रीगणपतिर्जयति ॥ ॐ अस्य श्रीनवार्णा-
मंत्रस्य ब्रह्म-विष्णु-रुद्रा ऋषयः गायत्र्युष्णिगनुष्टुप् ५३
छन्दांसि श्रीमहाकाली महालक्ष्मी महासरस्वत्यो

देवताः ऐं बीजम् ह्रीं शक्तिः क्लीं कीलकम् श्रीमहाकाली महालक्ष्मी महासरस्वती प्रीत्यर्थे जपे विनियोगः । ब्रह्माविष्णुरुद्रऋषिभ्यो नमः शिरसि । गायत्र्युष्णिगनुष्टुप् छन्दोभ्यो नमो मुखे । महाकाली महालक्ष्मी महासरस्वती देवताभ्यो नमः हृदि । ऐं बीजाय नमः गुह्ये । ह्रीं शक्तये नमः पादयोः । क्लीं कीलकाय नमः नाभौ । इति मूलेन करौ संशोध्य ॐ ऐं अंगुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः ।

ॐ ऐं अंगुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः ।

काभ्यां नमः । ॐ विच्चे कनिष्ठिकाभ्यां नमः । ॐ
ऐं ह्रीं क्लीं चामुंडायै विच्चे करतल करपृष्ठाभ्यां नमः। ॐ
ॐ एवं हृदयादि० ॥ ततोऽक्षरन्यासः । ॐ ऐं नमः
५५ शिखायाम् । ॐ ह्रीं नमो दक्षिण नेत्रे । ॐ क्लीं
नमो वामनेत्रे । ॐ चां नमो दक्षिणकर्णे । ॐ मुं
नमो वामकर्णे । ॐ डां नमो दक्षिण नासायाम् ।
ॐ ऐं नमो वामनासायाम् । ॐ विं नमो मुखे । ॐ ५५
च्चे नमो गुह्ये । एवं विन्यस्याष्टवारं मूलेन व्यापकं
कुर्यात् । ॐ ऐं प्राच्यै नमः । ॐ ऐं आग्नेय्यै नमः ।

ॐ ह्रीं दक्षिणायै नमः ॐ ह्रीं नैऋत्यै नमः।
ॐ क्लीं प्रतीच्यै नमः। ॐ क्लीं वायव्यै नमः। ॐ
चामुण्डायै उदीच्यै नमः। ॐ चामुण्डायै इशान्यै
५६ नमः। ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे उर्ध्वाय
नमः। ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे भूम्यै नमः।

॥ अथ ध्यानम् ॥

खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुशुण्डीं शिरः
शंखं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम्। ५८
नीलाश्मद्युतिमास्यपाददशकां सेवे

यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम्
ॐ ॥ १ ॥ अक्षस्रक्परशुं गदेषु कुलिसम्पद्मं धनुष्कु- ॐ
५७ ण्डिकां दण्डं शक्तिमसिञ्च चर्म जलजं घण्टां
सुराभाजनम् । शूलम्पाशसुदर्शने च दधतीं हस्तैः
प्रसन्नाननां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरो-
जस्थिताम् ॥ २ ॥ घण्टा शूलहलानि शंखमुसले
चक्रं धनुःसायकं हस्ताब्जैर्दधतीं घनान्तविलसच्छी ५७
तांशुतुल्यप्रभाम् । गौरीदेहसमुद्भवां त्रिजगतामाधा
रभूतां महा पूर्वामत्र सरस्वतीमनुभजेच्छुम्भादिदैत्या-

र्दिनीम् ॥ ३ ॥ ततः अष्टोत्तर शतम् ॐ ऐं ह्रीं
क्लीं चामुण्डायै विच्चे इति मन्त्रं जपेत् ॥

॥ इति ॥

२८ ॥ अथ रात्रिसूक्तम् ॥

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ।
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥ १ ॥

॥ ब्रह्मोवाच ॥

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरा- ५८
त्मिका । सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका

स्थिता ॥ २ ॥ अर्धमात्रास्थिता नित्या यानुच्चार्या
विशेषतः त्वमेव संध्या सावित्री त्वं देवि जननी
परा ॥ ३ ॥ त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते
५४ जगत् । त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा
॥ ४ ॥ विसृष्टौ सृष्टिरूपा त्वं स्थितिरुपा च पालने
तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ॥ ५ ॥
महाविद्या महामाया महामेधा महास्मृतिः । महामोहा
च भवती महादेवी महासुरी ॥ ६ ॥ प्रकृतिस्त्वञ्च ५४
सर्वस्य गुणत्रयविभाविनी कालरात्रिर्महारात्रिर्मोह

रात्रिश्च दारुणा ॥ ७ ॥ त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं
बुद्धिर्बोधलक्षणा । लज्जा पुष्टिस्तथा तुष्टिः त्वं शान्तिः
ॐ क्षान्तिरेव च ॥ ८ ॥ खड्गिनी शूलिनी घोरा गदिनी ॐ
६० चक्रिणी तथा । शंखिनी चापिनी बाणभुशुण्डीपरि-
घायुधा ॥ ९ ॥ सौम्यासौम्यतराशेषसौम्येभ्यस्त्वति
सुन्दरी । परापराणां परमा त्वमेव परमेश्वरी ॥ १० ॥
यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके । तस्य
सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ॥ ११ ॥
यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् । सोऽपि ६०

द्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ १२ ॥
विष्णुः शरीरग्रहणमहमीशान एव च । कारितास्ते
यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥ १३ ॥
सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता मोहयैतौ
दुराधर्षावसुरौ मधुकैटभौ ॥ १४ ॥ प्रबोधञ्च जग-
त्स्वामी नीयतामच्युतो लघु । बोधश्च क्रियतामस्य
हन्तुमेतौ महासुरौ ॥ १५ ॥ इति ॥

अथ सप्तशतीन्यासः ।

खड्गिनी शूलनी घोरा० ॥ अंगुष्ठाभ्यां नमः ।

शूलेन पाहि नो देवि० ॥ तर्ज्जनीभ्यांनमः । प्राच्यां
ॐ रक्षप्रतीच्यां च० । मध्यमाभ्यांनमः । सौम्यानियानि
६२ रूपाणि० अनामिकाभ्यां नमः ॥ खड्गशूल गदा
दीनि० कनिष्ठिकाभ्यां नमः ॥ सर्व स्वरूपे सर्वेसे०
करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः ॥
खड्गिनीशूलिनीघो० हृदयाय नमः । शूलेनपाहि-
नोदेवि० शिरसे स्वाहा ॥ प्राच्यां रक्ष प्रतीच्यां च
शिखायै वषट् ॥ सौम्यानि० यानि रूपाणि० कव- ६२
चाय हुं ॥ खड्गशूलगदादीनि० नेत्र त्रयाय वौषट्

सर्वस्वरूपे सर्वेशे० अस्त्रायफट् ॥

ओं अस्य प्रथमचरितस्य ब्रह्मा ऋषिः, महाकाली देवता, गायत्री छन्दो, नन्दा शक्तिः, रक्तदन्तिका बीज मग्निस्तत्वं, ऋग्वेदस्वरूपं, श्रीमहाकाली प्रीत्यर्थं प्रथमचरित जपे विनियोगः ॥

॥ अथ ध्यानम् ॥

खड्गं चक्रगदेषुचापपरिघाञ्छूलम्भुशुण्डीं शिरः
शंखं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषा वृताम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकाम्

उ० यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैट-
भम् ॥ १ ॥ इति ॥ पृ० १

३४ ओं मार्कण्डेय उवाच ।

सावर्णिस्सूर्यतनयो यो मनुः कथ्यतेऽष्टमः ।
निशामय तदुत्पत्तिं विस्तराद्गततो मम ॥ २ ॥
महामायानुभावेन यथा मन्वन्तराधिपः । स बभूव
महाभागः सावर्णिस्तनयो रवेः ॥३॥ स्वारोचिषेन्तरे
पूर्वञ्चैत्रवंशसमुद्भवः । सुरथो नाम राजाभूत्समस्ते ६७
क्षितिमण्डले ॥ ४ ॥ तस्य पालयतः सम्यक् प्रजा

ॐ पुत्रानिवौरसान् । बभूवुः शत्रवो भूपाः कोलाविध्वं-
सिनस्तदा ॥ ५ ॥ तस्य तैरभवद्युद्धमतिप्रबलद-
६५ ण्डिनः । न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः
॥ ६ ॥ ततः स्वपुरमायातो निजदेशाधिपोऽभवत् ।
आक्रान्तः स महाभागस्तैस्तदा प्रबलारिभिः
॥ ७ ॥ अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः ।
कोशो बलञ्चापहृतं तत्रापि स्वपुरे ततः ॥ ८ ॥ ततो
मृगयाव्याजेन हृतस्वाम्यः स भूपतिः । एकाकी हय- ६५
मारुह्य जगाम गहनं वनम् ॥ ९ ॥ स तत्राश्रमम

द्राक्षीद् द्विजवर्यस्य मेधसः । प्रशान्तश्वापदाकीर्ण-
मुनिशिष्योपशोभितम् ॥ १० ॥ तस्थौ कञ्चित्स
ॐ कालञ्च मुनिना तेन सत्कृतः । इतश्चेतश्च विचरंस्त- ॐ
स्मिन्मुनिवराश्रमे ॥ ११ ॥ सोऽचिन्तयत्तदा तत्र-
६६ ममत्वाकृष्ट चेतनः । मत्पूर्वैः पालितम्पूर्वं मया हीनं १
पुरं हि तत् ॥ १२ ॥ मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः
पाल्यते न वा । न जाने स प्रधानो मे शूरोहस्ती
सदामदः ॥ १३ ॥ मम वैरिवशं यातः कान् भोगा- ६६
नुपलप्स्यते । ये ममानुगतो नित्यं प्रसादधन भोजनैः

॥१४॥ अनुवृत्तिं ध्रु वन्तेऽद्य कुर्वन्त्यन्यमहीभृताम् ।
ॐ असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम् ॥१५॥
६७ सञ्चितः सोऽतिदुःखेनक्षयं कोशो गमिष्यति । ॐ
एतच्चान्यच्च सततञ्चिन्तयामास पार्थिवः ॥ ६ ॥
तत्रविप्राश्रमाभ्यासे वैश्यमेकं ददर्श सः । स पृष्टस्तेन १
कस्त्वं भो हेतुश्चागमनेऽत्र कः ॥ १७ ॥ सशोक
इव कस्मात्त्वं दुर्मना इव लक्ष्यसे । इत्याकर्ण्य वच ६७
स्तस्य भूपतेः प्रणयोदितम् ॥ १८ ॥ प्रत्युवाच स तं
वैश्यः प्रश्रयावनतो नृपम् ॥ १९ ॥ वैश्य उवाच

॥२०॥ समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले
॥ २१ ॥ पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ।
ॐ विहीनश्च धनैर्दारैः पुत्रैरादाय मे धनम् ॥ २२ ॥
 वनमभ्यागतो दुःखी .निरस्तश्चाप्तबन्धुभिः । सोऽहं
न वेद्मि पुत्राणां कुशलाकुशलात्मिकाम् ॥ २३ ॥
प्रवृत्तिं स्वजनानाञ्च दाराणाञ्चात्रसंस्थितः ।
किन्नु तेषां गृहे क्षेममक्षेमं किन्नु साम्प्रतम् ॥
॥ २४ ॥ कथन्ते किन्नु सद्वृत्ताः दुर्वृत्ताः
किन्नु मे सुताः ॥ २५ ॥ राजोवाच ॥ २६ ॥

यैर्निरस्तोर्भवांल्लुब्धैः पुत्र दारादिभिर्द्धनैः ॥ २७ ॥
तेषु किम्भवतः स्नेहमनुबध्नाति मानसम् ॥ २८ ॥
१०७ वैश्यउवाच ॥ २९ ॥ एवमेतद्यथा प्राह भवान १०७
६४ स्मद्गतं वचः ॥ ३० ॥ किङ्करोमि न बध्नातिमम
तिष्ठुरताम्मनः । यैः सन्त्यज्य पितृस्नेहं धनलुब्धै- १
र्निराकृतः ॥३१॥ पतिस्वजनहार्द्दञ्च हार्दितेष्वेव मे
मनः । किमेतन्नाभिजानामि जानन्नपि महामते
॥ ३२ ॥ यत्प्रेमप्रवणञ्चित्तं विगुणेष्वपि बन्धुषु ।
तेषां कृते मे निःश्वासो दौर्म्मनस्यञ्च जायते ॥३३॥ ६६

करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम् ॥ ३४ ॥
मार्कण्डेय उवाच ॥ ३५ ॥ ततस्तौ सहितौ विप्र
तम्मुनिं समुपस्थितौ॥३६॥ समाधिर्नाम वैश्योऽसौ
७० स च पार्थिवसत्तमः । कृत्वा तु तौ यथान्यायं यथा १
र्हन्तेन संविदम् ॥ ३७ ॥ उपविष्टौ कथाः काश्चिच्च-
क्रतुर्वैश्यपार्थिवौ ॥ ३८ ॥ राजोवाच ॥ ३९ ॥
भगवंस्त्वामहम्प्रष्टुमिच्छाम्येकं वदस्व तत् ॥ ४० ॥
दुःखाय यन्मे मनसः स्वचित्तायत्ततां विना । ममत्वं ७०
गतराज्यस्य राज्याङ्गेष्वखिलेष्वपि ॥ ४१ ॥ जान

तोऽपि यथाज्ञस्य किमेतन्मुनिसत्तम । अयञ्च नि-
ष्कृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः ॥ ४२ ॥ स्वजनेन
च सन्त्यक्तस्तेषु हार्दी तथाप्यति । एवमेष तथाहञ्च
द्धावप्यत्यन्तदुःखितौ ॥ ४३ ॥ दृष्टदोषेऽपि विषये
७१ ममत्वाकृष्टमानसौ । तत्किमेतन्महाभाग यन्मोहो
ज्ञानिनोरपि ॥४४॥ ममास्य च भवत्येषा विवेका १
न्धस्य मूढ़ता ॥ ४५ ॥ ऋषिरुवाच ॥ ४६ ॥ ज्ञान
मस्ति समस्तस्य जन्तोर्विषयगोचरे ॥४७॥ विषयश्च ७१
महाभाग यान्ति चैवंपृथक् पृथक् । दिवान्धाः प्राणिनः

केचिद्रात्रावन्धास्तथापरे ॥ ४८ ॥ केचिद्दिवा तथा
रात्रौ प्राणिनस्तुल्यदृष्टयः । ज्ञानिनो मनुजाः सत्यं
७२ किन्तु ते नहि केवलम् ॥ ४९ ॥ यतो हि ज्ञानिनः १
सर्वे पशुपक्षि मृगादयः । ज्ञानञ्च तन्मनुष्याणां
यत्तेषां मृगपक्षिणाम् ॥ ५० ॥ मनुष्याणां च यत्तेषां
तुल्यमन्यत्तथोभयोः । ज्ञानेऽपि सति पश्यैतान्पतङ्गा
ञ्छावचञ्चुषु ॥ ५१ ॥ कणमोक्षादृतान्मोहात्पीड्य- ७२
मानानपि क्षुधा । मानुषा मनुजव्याघ्राः साभिलाषः
सुतान्प्रति ॥ ५२ ॥ लोभात्प्रत्युपकाराय नन्वेतान्

किन्नपश्यसि । तथापि ममता वर्त्तें मोहगर्त्तें निपा
तिताः ॥ ५३ ॥ महामायाप्रभावेण संसारस्थितिका- अ०
७१ रिणी ॥ तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः १
७२ ॥५४॥ महामाया हरेश्चैषा तया संमोह्यते जगत् ।
ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥५५॥
बलादाकृष्य मोहाय महामाया प्रयच्छति । तया
विसृज्यते विश्वं जगदेतच्चराचरम् ॥५६॥ सैषा प्रसन्ना
वरदा नृणाम्भवति मुक्तये । सा विद्यापरमा मुक्ते हें- ७३
तुभूता सनातनी ॥ ५७ ॥ संसार बन्ध हेतुश्च

सैव सर्वेश्वरेश्वरी ॥ ५८ ॥ राजोवाच ॥ ५९ ॥
भगवन्का हि सा देवी महामायेति याम्भवान् ॥६०॥ श्री
ब्रवीति कथमुत्पन्ना सा कर्म्मास्याश्च किं द्विज ।
यत्प्रभावा च सा देवी यत्स्वरूपा यदुद्भवा ॥ ६१ ॥
तत्सव श्रोतुमिच्छामि त्वत्तो ब्रह्मविदांवर ॥ ६२ ॥ १
ऋषिरुवाच ॥ ६३ ॥ नित्यैव सा जगन्मूर्तिस्तया
सर्वमिदं जगत् ॥ ६४ ॥ तथापि तत्समुत्पत्तिर्बहुधा
श्रूयताम्मम । देवानाङ्कार्यसिद्ध्यर्थमाविर्भवति सा ७४
यदा ॥ ६५ ॥ उत्पन्नेति तदा लोके सा नित्याप्य-

मिधीयते । योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते
॥ ६६ ॥ आस्तीर्य शेषमभजत्कल्पान्ते भगवान्
प्रभुः । तदाद्वासुरौ घोरौ विख्यातौ मधुकैटभौ
॥ ६७ ॥ विष्णु कर्णमलोद्भूतौ हन्तुं ब्रह्माणमु-
द्यतौ । स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजा
पतिः ॥ ६८ ॥ दृष्ट्वा तावसुरौ चोग्रौ प्रसुप्तञ्च
जनार्दनम् । तुष्टाव योगनिद्रां तामेकाग्रहृदयस्थितः
॥ ६९ ॥ विबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् ।
विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ॥७०॥

निद्रांभगवतीं विष्णोरतुलान्तेजसः प्रभुः ॥ ७१ ॥
ब्रह्मोवाच ॥ ७२ ॥ त्वं स्वाहा त्वं स्वधा त्वं हि अ०
स० वषट्कारः स्वरात्मिका ॥ ७३ ॥ स्वधा त्वमक्षरे १
७६ नित्ये त्रिधा मात्रात्मिका स्थिता । अर्द्धमात्रा स्थिता
नित्या यानुच्चार्या विशेषतः ॥ ७४ ॥ त्वमेव सन्ध्या
सावित्री त्वं देवि जननी परा । त्वयैतद्धार्यते विश्वं
त्वयैतत्सृज्यते जगत् ॥ ७५ ॥ त्वयैतत्पाल्यते देवि ७६
त्वमत्स्यन्ते स सर्वदा । विसृष्टौ सृष्टिरूपा त्वं स्थिति-
रूपा च पालने ॥ ७६ ॥ तथा संहृतिरूपान्ते

जगतोऽस्य जगन्मये महाविद्या महामाया महामेधा
महास्मृतिः ॥ ७७ ॥ महा मोहा च भवती महादेवी महासुरी अ०
महासुरी । प्रकृतिस्त्वञ्च सर्वस्य गुणत्रयविभाविनी
॥ ७८ ॥ कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा । १
७१ त्वं श्रीस्त्वमीश्वरीस्त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा
॥ ७९ ॥ लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षा-
न्तिरेव च । खड्गिनी शूलिनी घोरा गदिनी चक्रिणी
तथा ॥ ॥८० ॥ शंखिनी चापिनी बाणभुशुण्डी ८७
परिघायुधा । सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसु-

न्दरी ॥ ८१ ॥ परापराणाम्परमा त्वमेव परमे-
श्वरी । यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ॐ
ॐ ॥ ८२ ॥ तस्य सर्वस्य या शक्तिः सा त्वं किंस्तू-
यसे तदा । यया त्वया जगत्स्रष्टा जगत्पात्यत्तियो १
७८ जगत् ॥ ८३ ॥ सोऽपि निद्रावशं नीतः कस्त्वां
स्तोतु मिहेश्वरः । विष्णुः शरीरग्रहणमहमीशान
एव च ॥ ८४ ॥ कारितास्ते यतोऽतस्त्वां कः
स्तोतुं शक्तिमान् भवेत् । सा त्वमित्थं प्रभावैःस्वैरु-
दारैर्देवि संस्तुता ॥ ८५ ॥ मोहयैतौ दुराधर्षावसुरौ ७८

मधुकैटभौ । प्रबोधञ्च जगत्स्वामी नीयता मच्युतो
लघु ॥८६॥ बोधश्च क्रियातामस्य हन्तुमेतौ महासुरौ दु०
दु० ॥ ८७ ॥ ऋषिरुवाच ॥ ८८ ॥ एवं स्तुता तदा
७६ देवी तामसी तत्र वेधसा ॥ ८९ ॥ विष्णोः प्रबो- १
धनार्थाय निहन्तुं मधुकैटभौ । नेत्रास्यनासिकाबाहु-
हृदयेभ्यस्तथोरसः निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्य
क्तजन्मनः ॥ उत्तस्थौ च जगन्नाथस्तया मुक्तो जना-
र्दनः ॥ ९१ ॥ एकार्णवेऽहिशयनात्ततः स ददृशे च ७६
तौ । मधुकैटभौ दुरात्मानावति वीर्यपराक्रमौ

॥ ९२ ॥ क्रोधरक्तेक्षणावत्तुं ब्राह्मणं जनितोद्यमौ ।
संमुत्थाय ततस्ताभ्यां युयुधे भगवान् हरिः ॥ ९३ ॥
पंचवर्षसहस्राणि बाहुप्रहरणो विभुः । ताचप्यतिब-
लोन्मत्तौ महामायाविमोहितौ ॥ ९४ ॥ उक्तवन्तौ
८० वरोऽस्मत्तो व्रियतामितिकेशवम् ॥ ९५ ॥ श्रीभग- १
वानुवाच ॥ ९६ ॥ भवेतामद्य मे तुष्टौ मम वध्या-
वुभावपि ॥ ९७ ॥ किमन्येन वरेणात्र एतावद्धि
वृतम्मम ॥९८ ऋषिरुवाच ॥ वंचिताभ्यामिति तदा ८०
सर्वमापोमयं जगत् ॥ १०० ॥ विलोक्य ताभ्यां

गदितो भगवान्कमलेक्षणः । आवां जहि न यत्रोर्वी
ॐ सलिलेन परिप्लुता ॥१०१॥ ऋषिरुवाच ॥१०२॥
८१ तथेत्युक्त्वा भगवता शंखचक्रगदाभृता । कृत्वा ॐ
चक्रेण वै च्छिन्ने जघने शिरसी तयोः ॥ १०३ ॥
एवमेषा समुत्पन्ना ब्रह्मणा संस्तुता स्वयम् । प्रभाव- १
मस्या देव्यास्तु भूयः शृणु वदामि ते ॥ १०४ ॥

इति श्री मार्कण्डेय पुराणे सावर्णिके मन्वन्तरे देवी महात्म्ये ( सफलाः सन्तु मम यजमानस्य वा कामाः ) ( एवं सर्वत्र पठनीयम् ) नाम प्रथमोऽध्यायः ॥ १ ॥ उवाच १४ अर्द्ध २४ ८१
श्लोकाः ६६ ॥ एवमादितः ॥ १०४ ॥

ॐ अस्य श्री मध्यम, चरितस्य विष्णुऋषिः
महालक्ष्मीर्देवता, उष्णिक्छन्दः, शाकम्भरीशक्तिः,
दुर्गा बीजं,वायुस्तत्वं, यजुर्वेदस्वरूपं, महालक्ष्मीप्रीत्यर्थं
मध्यमचरित जपे विनयोगः ॥ २ ॥

॥ अथ ध्यानम् ॥

अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुष्कुंडिकां
दण्डं शक्तिमसिञ्च चर्म जलजं घण्टां सुराभाजनम् ॥
शूलं पाश सुदर्शने च दधतीं हस्तैः प्रसन्नाननां सेवे
सैरिभ मर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥२॥

॥ ऋषिरुवाच ॥ १ ॥

देवासुरमभूद्युद्धम्पूर्णमब्दशतम्पुरा। महिषेऽसु-
८३ राणामधिपे देवानां च पुरन्दरे ॥ २ ॥ तत्रासुरै- अ०
र्महावीर्यैर्देवसैन्यम्पराजितम् । जित्वा च सकलान्दे- २
वानिन्द्रोऽभून्महिषासुरः ॥ ३ ॥ ततः पराजिता
देवाः पद्मयोनिं प्रजापतिम् । पुरस्कृत्य गतास्तत्र
यत्रेशगरुडध्वजौ ॥ ४ ॥ यथावृत्तन्तयोस्तद्वन्म-
हिषासुरचेष्टितम् । त्रिदशाः कथयामासुर्देवाभिभ- ८३
वविस्तरम् ॥ ५ ॥ सूर्येन्द्राग्न्यनिलेन्दूनां यमस्य वरु

णस्य च । अन्येषां चाधिकारान् स स्वयमेवाधिति-
ष्ठति ॥६॥ स्वर्गान्निराकृताः सर्वे तेन देवगणा भुवि ।
७० विचरन्ति यथा मर्त्या महिषेण दुरात्मना ॥७॥ एतद्वः ४०
कथितं सर्वममरारिविचेष्टितम् । शरणं व प्रपन्नाः
८५ स्मो वधस्तस्य विचिन्त्यताम् ॥ ८ ॥ इत्थं निशम्य २
देवानां वचांसि मधुसूदनः । चकार कोपं शम्भुश्च
भ्रु कुटीकुटिलाननौ ॥ ९ ॥ ततोऽतिकोपपूर्णस्य ८४
चक्रिणो वदनात्ततः । निश्चक्राम महत्तेजो ब्रह्मणः
शङ्करस्य च ॥१०॥ अन्येषां चैव देवानां शक्रादीनां

शरीरतः । निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत
॥ ११ ॥ अतीव तेजसः कूटं ज्वलन्तमिव पर्वतम् । अ०
दु० ददृशुस्ते सुरास्तत्र ज्वालाव्याप्तदिगन्तरम् ॥ १२ ॥ २
८५ अतुलं तत्र तत्तेजः सर्वदेवशरीरजम् । एकस्थन्तद-
भून्नारी व्याप्तलोकत्रयन्त्विषा ॥ १३ ॥ यदभूच्छा
भवं तेजस्तेनाजायत तन्मुखम् । याम्येन चाभवन्केशा
बाहवो विष्णुतेजसा ॥ १४ ॥ सौम्येनस्तनोर्युग्मं ८५
मध्यं चन्द्रेण चाभवत् । वारुणेन च जङ्घोरू नित-
म्बस्तेजसा भुवः ॥ १५ ॥ ब्रह्मणस्तेजसा पादौ

तदंगुल्योऽर्कतेजसा । वसूनां च करांगुल्यः कौबेरेण
च नासिका ॥ १६ ॥ तस्यास्तु दन्ताः सम्भूताः
प्राजापत्येन तेजसा । नयनत्रितयं जज्ञे तथा पावक-
तेजसा ॥ १७ ॥ भ्रुवौ च सन्ध्ययोस्तेजः श्रवणा
८६ वनिलस्य च । अन्येषां चैव देवानां संभवस्तेजसां
शिवा ॥ १८ ॥ ततः समस्तदेवानां तेजोराशिसमु-
द्भवाम् । तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः
॥ १६ ॥ शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिना
कधृक् । चक्रञ्च दत्तवान् कृष्णः समुत्पाद्य स्वचक्रतः ८६

॥ २० ॥ शंखञ्च वरुणः शक्तिं ददौ तस्यै हुता-
शनः मारुतो दत्तवांश्चापं बाणपूर्णौ तथेषुधी ॥२१॥
वज्रमिन्द्रः समुत्पाट्य कुलिशादमराधिपः। ददौ
८७ तस्यै सहस्राक्षो घण्टामैरावताद्गजात् ॥ २२ ॥
कालदण्डाद्यमो दण्डं पाशं चाम्बुपतिर्ददौ। प्रजा- २
पतिश्चाक्षमालां ददौ ब्रह्मा कमण्डलुम् ॥ २३ ॥
समस्तरोमकूपेषु निज रश्मीन् दिवाकरः। कालश्च ८७
दत्तवान् खड्गं तस्याश्चर्म च निर्मलम् ॥ २४ ॥
क्षीरोदश्चामलं हारमजरे च तथाम्बरे। चूडामणि-

न्तथा दिव्यं कुण्डले कटकानि च ॥ २५ ॥ अर्ध-
चन्द्रं तथा शुभ्रं केयूरान्सर्वबाहुषु । नूपुरौ विमलौ
तद्वद्ग्रैवेयकमनुत्तमम् ॥ २६ ॥ अंगुलीयकरत्नानि
समस्तास्वंगुलीषु च । विश्वकर्मा ददौ तस्यै परशु-
ञ्चातिनिर्मलम् ॥ २७ ॥ अस्त्राण्यनेकरूपाणि तथा
भेद्यञ्च दंशनम् । अम्लानपङ्कजां मालां शिरस्युरसि
चापराम् ॥ २८ ॥ अददज्जलधिस्तस्यै पङ्कजञ्चा-
तिशोभनम् । हिमवान्वाहनं सिंहं रत्नानि विवि-
धानि च ॥ २९ ॥ ददावशून्यं सुरया पानपात्रं

श्रीः धनाधिपः । शेषश्च सर्वनागेशो महामणि विभूषितम् दु०
८६ ॥ ३० ॥ नागहारं ददौ तस्यै धत्ते यः पृथिवीमि-
माम् । अन्यैरपि सुरैर्देवीभूषणैरायुधैस्तथा ॥ ३१ ॥
सम्मानिता ननादोच्चैः साट्टहासम्मुहुर्मुहुः । तस्या २
नादेन घोरेण कृत्स्नमापूरितं नभः ॥ ३२ ॥
अमायतातिमहता प्रतिशब्दो महानभूत् । चुक्षुभु-
स्सकला लोकाः समुद्राश्च चकम्पिरे ॥ ३३ ॥ चचाल
बसुधा चेलुः सकलाश्च महीधराः । जयेति देवाश्च ८४
मुदाः तामूचुः सिंहवाहिनीम् ॥ ३४ ॥ तुष्टुवुर्मुन-

यश्चैनां भक्तिनम्रात्ममूर्तयः । दृष्ट्वा समस्तं संक्षुब्धं
त्रैलोक्यममरारयः ॥ ३५ ॥ सन्नद्धाखिलसैन्यास्ते
समुत्तस्थुरुदायुधाः । आः किमेतदिति क्रोधादा-
भाष्य महिषासुरः ॥ ३६ ॥ अभ्यधावत तं शब्दम-
शेषैरसुरैर्वृतः । स ददर्श ततो देवीं व्याप्तलोकत्र-
यान्त्विषा ॥ ३७ ॥ पादाक्रान्त्या नतभुवं किरीटो-
ल्लिखिताम्बराम् । क्षोभिताशेषपातालां धनुर्ज्यानिः
स्वनेन ताम् ॥ ३८ ॥ दिशो भुजसहस्रेण समन्ता-
द्व्याप्य संस्थिताम् । ततः प्रवृत्तं युद्धन्तया देव्या

